तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

सचित्रिमासपत्रिका
अक्टोबर् - २०२० रू.५/-

१६-१०-२०२०
भृगुवासरे
रात्रौ
महाशेषवाहनम्



तिरुमल
श्रीवेङ्कटेश्वरस्वामिनः नवरात्रि ब्रह्मोत्सवः
२०२० अक्टोबर् १६ तः २४ पर्यन्तम्

# तिरुमल श्री स्वामिनः आलये सालकट्ल ब्रह्मोत्सवेषु प्रचलित विविध वाहनसेवानां दृश्यमालिका







ध्वजारोहणम्, महाशेषवाहनसेवायां भागंगृहीताः
ति.ति.दे. उन्नताधिकारिणः



तिरुमलक्षेत्रं आगताः श्रीवल्लिपुत्तूरु गोदामालिकाः



आन्ध्रराष्ट्रमुख्यमन्त्रिवर्याः
गौरवनीयाः श्री वै.यस्. जगन्मोहनरेड्डि महोदयाः
श्री स्वामिनः गरुडसेवायां भागग्रहण दृश्यम्



आन्ध्रराष्ट्र मुख्यमन्त्रिवर्याः गौरवनीयाः श्री वै.यस्.जगन्मोहनरेड्डि महोदयाः
श्रीस्वामिनः प्रभुत्व प्रतिनिधित्वेन पीताम्बरवस्त्र समर्पण दृश्यम्।



तिरुमल क्षेत्रे प्रचलित सुंदरकांड पारायणे भागंगृहीताः आन्ध्र,
कर्णाटक राष्ट्र मुख्यमन्त्रिवर्याः गौरवनीयाः
श्री वै.यस्.जगन्मोहनरेड्डि महोदयाः गौवरनीयाः बि.यस्.यडियूरप्प महोदयाः।



आन्ध्रराष्ट्र मुख्यमन्त्रिवर्येभ्यः गौरवनीयभ्यः
श्री वै.यस्.जगन्मोहनरेड्डि महोदयेभ्यः ति.ति.दे. धर्मकर्तलमण्डलि अध्यक्षाः
श्री वै.वि. सुब्बारेड्डि महाशयाः श्री स्वामिनः प्रसाद समर्पण दृश्यम्



आन्ध्रराष्ट्र मुख्यमन्त्रिवर्याः गौरवनीयाः
श्री वै.एस्.जगन् मोहनरेड्डि महाभागाः कर्णाटक राष्ट्र मुख्यमन्त्रि वर्येभ्यः गौरवनीयभ्यः
बी.यस्. यडियूरप्प महाशयेभ्यः श्रीस्वामिनः चित्रपट समर्पण दृश्यम्



## गीतामृतम्

पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः।।

(भगवद्गीता १५/१)

भगवान् श्रीकृष्णः स्वीयं पाञ्चजन्यं शङ्खम् अधमत्। अर्जुनः देवदत्तनामकं स्वीयं शङ्खम् अधमत्। भीमस्तु भयङ्कराणां कार्याणां करणे कुशलः। पौण्ड्रनामकः तस्य शङ्खोपि महान् एव।

## सङ्कीर्तनम्



तथा कुरुष्वमुदामामद्येव
अथोक्षजस्ते अनुदासोहम् ।।तथा।।
तवास्मि शरणं दहराहं
भवदुरितानि भञ्ज मम
भुवि कृतं च या पुरा प्रतिज्ञां
जवन ददामि सर्वेभ्य इति ।।तथा।।
व्रजामि शरणं वरद् तवाहं
त्यजितानुबन्धधर्मं मम
भुजकृतां पुरा प्रतिज्ञाम्
वृजिनैर्मोक्षयिष्यामीति ।।तथा।।
चिन्तितं मया श्रीवेङ्कटेश
किन्तु त्वं मयि कृपां कुरु
तन्तु हि पुराकृतं प्रतिज्ञाम्
अन्तगतिं नयामीति महि ।।तथा।।

(श्री अन्नमाचार्यस्य संस्कृतसङ्कीर्तनानि)

# नवनवोन्मेषशरन्नवरात्रयः - नवरात्रिब्रह्मोत्सवः

शरत्कालः स्वच्छतायाः सङ्केतः। शरच्चन्द्रः, शरत्पूर्णिमा इत्यादि पदानि प्राचीनशास्त्रेषु काव्येषु च दृश्यन्ते। निर्मलाकाशः, पूर्णचन्द्रश्च शरदि अद्भुतत्वेन दृश्येते। तादृशं स्वच्छं चित्तमेव दुर्गादेव्यै प्रीतिकारिणी शरत् भवति। जगद्रक्षणसामर्थ्यवती तदनुगुणप्रेमदयापूर्णा माता सौन्दर्यलहरीति स्तुता।

धर्मस्य लोकस्य च विघातकारिणीः आसुरशक्तीः, विनाशयितुं देवताशक्तिभिः प्रार्थिता 'शक्ति'ः आविर्बभूव। राक्षससंहारगाथाः पुराणेषु बहुविधा वर्णिताः सन्ति। ज्ञानं, ऐश्वर्यं, शक्तिः इति त्रीणि व्यक्तेः समाजस्य च प्रधानतया आवश्यकानि भवन्ति। एतेषां त्रयाणामपि स्वरूपाणां समाहार एव जगन्माता। ज्ञानं सरस्वतीरूपेण, ऐश्वर्यं लक्ष्मीरूपेण शक्तिं भवानीरूपेण च उपास्य तिसृणामपि एकस्य स्वरूपश्च दुर्गारूपेण आराधनं अस्माकं सनातनः संप्रदायः। तत एव ''प्रणो देवी सरस्वती दुर्गां देवीं शरणमहं प्रपद्ये'' ''देवीं वाचं अजनयन्त देवाः'' इत्यादि मन्त्राः दुर्गां मातरं देवीनाम्ना कीर्तयामासुः! एकैव देवी बहुभिः प्रकारैः आराध्यते। एतानि देवीनामानि देवीरूपाणि च तत्त्वसंकेता भवन्ति। एकैकस्मिन्नपि नाम्नि अनन्ता अर्थाः निलीनाः सन्ति इति कृत्वा तानि नामानि मन्त्राश्च जप्यन्ते। मुख्यतया शरन्नवरात्रिषु देवी पराक्रमस्वरूपं संभाव्यते। महिषासुरादिदुष्टशक्तिसंहारिणीरूपेण मातरं आराधयन्ति।

स्वच्छेन मनसा 'हे मातः'! इत्याहूय क्रियमाणया पूजया नवरात्रिकालोत्सवैश्च देशः सर्वोपि पुनीतो भवति। दुर्गायाः नामैव एको महामन्त्रः। धर्मस्य आधारः मातैव। धर्मबद्ध जीवितवतां आधारो भूत्वा माता तान् रक्षति। देवी नामानि सर्वाण्यपि मन्त्रा एव। शक्तिसहितः शब्द एव मन्त्रो भवति। ऐश्वर्यस्य पराक्रमस्य च शक्तिः प्रतीकरूपा भवति। ऊहातीततत्त्वोपेता दुर्गादेवी दुराचारान् विनाशयति।

तथाविधाः आसुरीशक्तीः संहृत्य क्षेमकरसात्त्विकशक्तीः परिरक्ष्य सर्वेभ्योपि शान्तिं ददातु इति मातॄणां मातरं दुर्गादेवीं प्रार्थयामः।

श्री वेङ्कटेश्वरस्य ब्रह्मोत्सवा अपि नवरात्रिकाले एव वैभवोपेताः प्रचलन्ति। तिरुमलक्षेत्रं सदा कल्याणमयमेव। अस्मिन् वत्सरे अधिकमासः समागतः इति हेतोः वार्षिकब्रह्मोत्सवैः सहनवरात्रिब्रह्मोत्सवा अपि समागताः। अस्मिन् ब्रह्मोत्सवे वेङ्कटेश्वरः सर्वालंकारभूषितः देवीसमेतश्च विविधवाहनेषु गच्छन् भक्तेभ्यो दर्शनं अनुगृह्णाति। भक्ताश्च मौनेन मनस्येव प्रार्थनां कुर्वन्ति। मनोनेत्रेण स्वामिनं विलोकयन्ति।

श्रीनिवासप्रभुः अर्थिनां कल्पतरुः, मनोरथसिद्धिप्रदं दैवं भवति। तन्मयतया स्तोतॄणां आनन्दरूपं भूत्वा विराजते। तादृशस्वामिहृदये व्यूहलक्ष्मीनाम्ना महालक्ष्मीः विलसति। तत एव सः श्रीनिवासो बभूव। ततश्च तिरुमल क्षेत्रे क्रियमाणा सर्वापि अर्चना सपदि हृदयलक्ष्मीसमर्चनासमेता भवति। तिरुमल क्षेत्रे स्थितोयं संप्रदायः। शरन्नवरात्रिषु वेङ्कटाचलक्षेत्रे यत्र भगवान् देवी च अभिन्नतया स्तः ब्रह्मोत्सवदर्शनेन भगवतः देव्याश्च अर्चनफलं लभ्यते। क्षेत्रपवित्रतायाः यथा भंगो न भवति तथा त्रिकरणशुद्ध्या क्षेत्रसंप्रदायमनुसरामः। श्रीनिवासपरब्रह्मणः ब्रह्मोत्सवेषु पवित्रबुध्या सान्निध्यं भजामः। नित्यकल्याणचक्रवर्तिनः सप्तगिरीश्वरस्य संपूर्णानुग्रह पात्रं भवेम।

श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये।

तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका
सम्पुटिः-०७ सञ्चिका-०७

वेङ्कटाद्रिसमं स्थानं
ब्रह्माण्डे नास्ति किञ्चन ।
वेङ्कटेशसमो देवो
न भूतो न भविष्यति ॥

# अक्टोबर् - २०२०

श्रीशार्वरि नाम संवत्सरस्य अधिक आश्वयुज पूर्णिमा तः
निज आश्वयुज पूर्णिमा पर्यन्तम् - १९४१



# सप्तगिरिः



मुखचित्रम् - श्रीदेवीभूदेवीभ्यां सहितः मलयप्पस्वामी
अन्तिमरक्षापुटः - हंसवाहने वीणापाणिरूपेण श्रीमलय्यस्वामी


गौरवसम्पादकः:-
डा.के.एस्.जवहर् रेड्डि I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः:
आचार्य के.राजगोपालन्, Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी
प्रकाशनमुद्रणविभागः, ति.ति.दे.,
मुद्रणालयः, तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.


**सूचना**
मुद्रितलेखानां विचाराः लेखकानामेव ।
एतद्विषये अस्माकं दायित्वं नास्ति।
— प्रधानसम्पादकः


**सङ्केतः**
प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९,
२२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
संपर्क कुर्वन्तु -
sapthagiri_helpdesk@tirumala.org


एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-

# सप्तगिरीश्वरः

- डा. महामहोपाध्यायः समुद्राल लक्ष्मणय्य

''अस्तीत्येके नायमस्तीति चैके'' - (कठोपनिषदि १-२०) इति श्रुतिः। अस्तिनास्तिविचिकित्सेयं जीवात्मपरा वा परमात्मपरा वा अनादिकालात्प्रवृत्ता ज्ञायते। अत्र विषये आस्तिकाः नास्तिकाश्च स्वस्वमतानुसारेण स्वीयान् वादान् निरूपयन्ति।

आस्तिकाः कार्यरूपस्यास्य जगतः कर्तृत्वेन भगवन्तं साधयन्ति। कर्तारं विना कार्यस्यासम्भवात्। न केवलं जगतः स्रष्टृत्वं परन्तु तस्य पोषकत्वं अन्ते संहारकत्वं च आवश्यकमिति तस्यैव भगवतः सृष्टिस्थितिसंहाररूपाणि त्रिविधान्यपि कार्याणि परिकल्पयन्ति।

'एकं सत् विप्रा बहुधा वदन्ति' इति वेदवचनमनुसृत्य एक एव देवः हरि-हर-ब्रह्मरूपाणि त्रिविधान्यपि स्वीकृत्य तत्तत्कार्यं करोतीति कथयन्ति। उक्तं हि कालिदासेन -

तिसृभिःस्त्वमवस्थाभिर्महिमानमुदीरयन्।
प्रलयस्थितिसर्गाणामेकः कारणतां गतः।।
(कुमारसम्भवे २-६) इति।

नास्तिकास्तु प्रकृतिरेव एतत्सर्वं निर्वहति, तस्याः प्रेरकत्वेन अन्यस्य कस्यचित्परिकल्पनमनावश्यकमिति ब्रुवन्ति।

अस्त्वेतत्। भगवतः अस्तित्वं 'भगवान् अस्ति इति सुदृढं प्रत्ययमवलम्ब्यैव सिद्धं भवतीत्यत्र न संशयः। तत एव-

**मन्त्रे तीर्थे तथा देवे दैवज्ञे भेषजे गुरौ।**
**यादृशी भावना यस्य सिद्धिर्भवति तादृशी।**
**(विक्रमचरिते-६४)**

इति सूक्तिमनुसृत्य न केवलं भगवतः अस्तित्वं, तस्य अनुग्रहप्राप्तिरपि विश्वासाधीनैवेति सिध्द्यति। 'अस्तीत्येवोपलब्धव्यः' (११-३-१३) इति कठोपनिषद्वचनमपि तदेव स्थापयति।

भगवतः स्वरूपं कीदृशम्? स कुत्र वर्तते? किं करोति? इत्येवमादीनां प्रश्नानां समाधानानि विविधमतानुयायिभिः विविधैरेव प्रकारैः प्रतिपाद्यन्ते। तत्रास्तिकेषु केचित् पर-व्यूह-विभवान्तर्याम्यर्चारूपैः भगवतः स्वरूपं पञ्चधा वर्तत इति कथयन्ति।

अधुना अर्चारूपेण स्थितस्य भगवतः श्रीनिवासस्य स्वरूपं प्रति चर्चा क्रियत इति हेतोः तत्रादौ विग्रहाराधनं प्रत्यपि किञ्चिदिव विचारणमप्रस्तुतं न भवतीत्यभिप्रैमि।

आगमशास्त्रोक्तया दिशा आलयेषु प्रतिष्ठितानां विग्रहाणां पूजा विधीयते विग्रहाराधकैः। एतासां मूर्तीनां भेदा नैकविधाः। तासां लक्षणानि शास्त्रेषु बहुधा निरूपितानि सन्ति।

आस्तिका अपि केचिद्विग्रहाराधनं नाङ्गीकुर्वन्ति। आर्यसामाजिकाः एतादृशाः। श्रीरामकृष्णमठादिषु नूतनतया व्यवस्थापितेष्वपि केषुचित्सम्प्रदायेषु मूर्तिपूजाऽङ्गीक्रियते। श्रीरामकृष्णो देवीमूर्तिमाराध्यैव ब्रह्मविद्बभूव। विग्रहरूपेण स्थितस्य भगवतः आराधने भक्तिः, श्रद्धा, विश्वासश्च प्रामुख्यं भजन्तीति निश्चप्रचम्।

विग्रहाणां केषाञ्चित् स्वयंव्यक्तत्वं कैश्चित्प्रतिपाद्यते। शिल्पिभिः शास्त्रनिर्दिष्टया रीत्या कृतानां विग्रहाणां प्रतिष्ठापनविधिं प्रत्यक्षं वयं पश्यामः। परन्तु अनेकेषु प्राचीनेष्वालयेषु आलयचरित्रं प्रति अथवा तत्रत्यं विग्रहं प्रति पृष्टा अर्चकाः "विग्रहोऽयं स्वयंव्यक्तः" इति वदन्ति। बहुषु स्थलपुराणेषु प्राचीनानां विग्रहाणां स्वयं व्यक्तत्वमभिवर्णितं दृश्यते।

समाजे विग्रहाराधनस्य महत्प्राधान्यं वर्तत इत्यत्र महता यत्नेन प्रयासेन च निर्मिताः आलया एव प्रमाणतां गच्छन्ति। विशिष्य दक्षिणभारतदेशे तादृशदेवालयानां निर्माणकौशलं प्रेक्षकान् विस्मितान् विधत्ते। आलये स्थापिता मूर्तिरपि कदाचित् भक्तजनाकर्षणे प्रामुख्यं भजति। विध्युक्तपूजाविधानं क्रमेण अनुष्ठीयमानं सत् देवतामूर्तेः प्रसिद्धेः कारणं भवति। तदुक्तं कुलार्णवतन्त्रे -

**आभिरूप्याच्च बिम्बस्य पूजायाश्च विशेषतः।**
**साधकस्य च विश्वासात् सन्निधौ देवता भवेत्।।(६-७६)इति।**

अधुनाऽस्माभिराराध्यमानेषु दैवतेषु 'स्वयं व्यक्त' इति भाव्यमानः सप्तगिरीश्वरः प्रथमगणनीयो भवति। तिरुमल देवालये वैखानसागमोक्तप्रक्रियामवलम्ब्य पूजादिकं विधीयते। अनुदिनं सहस्रशः भक्ताः विविधप्रदेशेभ्यः समागत्य स्वामिनमर्चयन्ति। धनमपि प्रभूतं देवस्थानेन लभ्यते। धनागमस्थैर्यमनुसृत्य विविधेषु लोकोपकारककार्येषु देवस्थानस्य प्रवृत्तिरपि आश्चर्यावहा भवति। तत एव प्रपञ्चे सर्वत्र तिरुपतिदेवस्य प्रख्यातिः परिव्याप्ता दृश्यते।

केचित् चरित्रकाराः द्विसहस्रवर्षेभ्यः प्रागेवास्य देवालयस्य स्थितिं मन्यन्ते। परन्तु शिलाशासनोपलब्धिकालात् पूर्वं कीदृशी स्थितिरासीदिति निश्चप्रचं किमपि वक्तुं न प्रभवामः।

वेङ्कटाचलस्य प्राशस्त्यं तावत् वराह-पद्म-हरिवंश-ब्रह्माण्ड-मार्कण्डेय-वामन-ब्रह्म-स्कान्द-आदित्य-भविष्योत्तरनामकेषु पुराणेषु परिकीर्तितमस्ति।

आदित्यपुराणेऽस्य क्षेत्रस्य श्रीनिवासस्य च महिमा एवं निर्दिष्टा -

**वेङ्कटाद्रिसमं स्थानं ब्रह्माण्डे नास्ति किञ्चन।**
**वेङ्कटेशसमो देवो न भूतो न भविष्यति।**
**(आदित्य १-५)**

तिरुपतिक्षेत्रस्य वैभवं साक्षात्पश्यन्तो जनाः अधुनाऽपि आदित्यपुराणोक्तिं स्वभावोक्तिमेव मन्यन्ते।





# श्रीमान् वेङ्कटनाथार्यः

- डा.वि.वासुदेवन्, चरवाणी - ९८९५०१६७२४

श्रीवेदान्तदेशिकाः इति प्रख्यातनामधेयाः महादार्शनिकाः महान्तः आचार्यः सुप्रसिद्धाः। ते साक्षात् भगवतः श्रीवेङ्कटनाथस्य अवतारभूताः।

अयमस्ति अवतारप्रभावः - एतेषां पितृपादाः अनन्तसूरिः इति प्रसिद्धाः विद्वांसः भक्ततल्लजाः काञ्चीपुरे आसन्। कदाचित् तेषां स्वप्ने श्रीवेङ्कटनाथः आविर्भूय 'पुत्रलाभाय श्रीवेङ्कटशैलम् आगच्छ' इति आज्ञापयामास। तेऽपि पुलकाङ्कितगात्राः धर्मपत्नीसहिताः श्रीवेङ्कटशैलम् आगत्य भगवतः सेवया संतुष्टाः आसन्। तत्रापि पुनः तत्पत्न्याः स्वप्ने भगवान् आविर्भूय दिव्यां स्वघण्टां दत्वा, तन्निगरणाय च आदिशत्। ''अहमेव घण्टांशः तव पुत्रत्वेन भविष्यामि'' इति च प्रोवाच। अत्यन्तविलक्षणं स्वप्नं दृष्ट्वा संतुष्टा सा भगवतः अनुग्रहविशेषमेव चिन्तयन्ती आसीत्। परं परदिने भगवतः श्रीनिवासस्य दिव्यमन्दिरे अर्चकाः आराधनार्थघण्टायाः अदर्शनेन चकिताः। ततः स्वप्नवृत्तान्तं विज्ञाय भगवतः अयं लीलाविशेषः इति ज्ञात्वा विस्मिताः। साक्षात् भगवान् श्रीवेङ्कटेशः अवतरिष्यति, तारयिष्यति च जनान् इति प्रतीक्षमाणाः सर्वे आसन्।

पश्चादपि द्वादशवर्षकालं यावत् तस्याः पत्न्याः गर्भे वासं कृत्वा विलक्षणप्रभावं असूचयदेव भगवान्। अथ श्रीवेङ्कटनाथस्य ब्रह्मोत्सवे तीर्थदिने भाद्रपदस्य श्रवणनक्षत्रयुते शुभदिने एतेषां दिव्यजन्म आसीत्। तदनुसारेण श्रीवेङ्कटनाथः इत्येव तेषां नामधेयम् अकुर्वन् पितृपादाः।

श्रीवेङ्कटाचलमाहात्म्ये ब्रह्माण्डपुराणान्तर्गते एतेषाम् प्रभावः प्रोक्तः। तथा श्रीवराहपुराणे च श्रीवेङ्कटेशस्य अष्टोत्तरशतनामावलीस्तोत्रे च एतेषां प्रभावः प्रकटितः। ''घण्टा हरेः समजनिष्ट यदात्मनेति'' इति एते स्वयं सूचयन्ति स्ववैभवम्। ''वेङ्कटेशावतारोऽयं तद्घण्टांशोऽथ वाभवेत्'' इति च तत्कुमाराः निर्दिशन्ति श्रीदेशिकमङ्गलस्तोत्रे।

काञ्च्यां लब्धावतारा इमे श्रीरङ्गे सेवानिरताः। श्रीभगवता रामानुजार्येण प्रवर्तितस्य श्रीवैष्णवसंप्रदायस्य प्रतिष्ठापकाः अद्वितीयाः व्यराजन्त। महादार्शनिकाः, महाकवयः महाभागवताः महदवतारभूताः महात्मानः माननीया मनीषिणाम् भवन्त्येते। एतेषां ७५० तमः अवतारमहोत्सवः अचिरादेव भुवि सर्वत्र विद्यासंस्थानेषु देवालयेषु च आचरितः।

एतेषां दिव्यवैभवस्य निदर्शनानि फलानि च इमानि -

१. श्रीभगवद्रामानुजप्रदर्शितस्य शरणागतिसंप्रदायस्य संरक्षणम् अभवत्।

२.शताधिकग्रन्थैः विशिष्टाद्वैतसंप्रदायः पोषितः।

३. बहुत्र वादेषु विशिष्टाद्वैतसिद्धान्तं संस्थाप्य प्रवर्तयामासुः।
४. श्रीगरुडमन्त्रस्य अनवरतजपेन तदनुग्रहपात्रम् अभवन्।
५. तपसा विद्यादेवं श्रीहयग्रीवं प्रसाद्य तदनुग्रहेण सर्वकलाः स्वाधीनतया अकुर्वन्।
६. श्रीरङ्गे श्रीरङ्गनाथः एतान् 'वेदान्ताचार्यः' इति स्वनाम्ना अभूषयत्।
७. अपि च कवितार्किकसिंहः, सर्वतन्त्रस्वतन्त्रः इत्यादिबिरुदभूषिताः।
८. रात्रौ एकस्मिन् यामे एव भगवतः भागवतानां च निदेशेन 'पादुकासहस्रं' इति अत्यद्भुतं स्तोत्रं व्यरचयन्।
९. श्रीवेङ्कटेशविषयं 'दयाशतकम्' इति स्तोत्रं च एतत्कृतं सुप्रसिद्धमेव।
१०. विभवकाले (जीवनकाले) अत्यद्भुताः काश्चन घटनाः अपि एतेषाम् सर्वतन्त्रस्वतन्त्रवैभवं सूचयन्ति एव। यथा श्रीस्तुत्या धनवर्षदानं, कूपनिर्माणं, स्वशिल्पनिर्माणं, सर्पदमनम् इत्यादि।

श्रीवेदान्तदेशिकैः विरचिताः परश्शतं प्रबन्धाः एव इदानीमपि पठनपाठनप्रक्रियासु परिपाल्यमानाः परमनिधयः भवन्ति अस्माकम्। एतैः विरचिताः च ग्रन्थाः बहुमुखाः भ्राजन्ते। ते पञ्चधा विभज्य परिगणनीयाः भवन्ति।

**शास्त्रग्रन्थाः -** मीमांसाशास्त्रे सेश्वरमीमांसा, मीमांसापादुका इति कृतिद्वयं, न्यायशास्त्रे न्यायपरिशुद्धिः इति अत्युत्तमः ग्रन्थः, वेदान्तशास्त्रे तत्त्वमुक्ताकलापः, न्यायसिद्धाञ्जनम् इति प्रकरणग्रन्थद्वयं, तत्त्वटीका, सर्वार्थसिद्धिः अधिकरणदर्पणम् इति व्याख्यानग्रन्थाः, शतदूषणी इति वादग्रन्थः अधिकरणसारावली इति च वेदान्तशास्त्रसारग्रन्थः च।

**काव्यग्रन्थाः-** कवितल्लजाः कवितार्किकसिंहः इति सहृदयदत्तबिरुदभूषिताः काव्यग्रन्थान् नैकप्रकारान् रचयामासुः - यादवाभ्युदयं महाकाव्यं, संकल्पसूर्योदयः नाम नाटकम्, हंससंदेशः इति संदेशकाव्यम्, सुभाषितनीवी इति खण्डकाव्यं, पादुकासहस्रं स्तोत्रकाव्यं च। एतत्काव्यामृतरसास्वादः एव अस्माकं कालयापनाय पर्याप्तः स्यादिति रसिकाः रमन्ते तुष्यन्ति च।

**स्तोत्रग्रन्थाः -** श्रीशस्य भगवतः नारायणस्य स्तुतिपराः स्तोत्रग्रन्थाः भक्तिभावाभिवर्धुकाः उपत्रिंशत् सन्ति। भक्तानां कर्णचित्तरञ्जकं भक्तिमुक्तिदायकं तत्त्वधीविवर्धकं अर्थशब्दचित्रितं सर्वकाम्यसिद्धिदं स्तोत्रजातम् अद्यापि नारायणपरायणानां पारायणविषयः आबालगोपालं प्रसिद्धमेव।

**रक्षाग्रन्थाः-** श्रीवैष्णवधर्माः विहिता वर्तन्ते महाभारतादिषु नित्यहरिपूजनं ऊर्ध्वपुण्ड्रधारणं, शङ्खचक्रचिह्नधारणं, भगवति शरणागतिः इत्याद्याः। तान् प्रमाणपुरस्सरं प्रतिपाद्य तद्धर्मान् रक्षन्ति। रक्षाग्रन्थेषु सच्चरित्ररक्षा, निक्षेपरक्षा, श्रीपाञ्चरात्ररक्षा, गीतार्थसंग्रहरक्षा, रहस्यरक्षा, श्रीभगवद्रामानुजमुनिना यामुनमुनिना च विहितानां स्तोत्राणां व्याख्यानमुखेन रहस्यार्थानां प्रदर्शिनी।

**भाषाप्रबन्धाः-** द्राविडभाषायां नैके स्तोत्रप्रबन्धाः रचिताः एतैः। संस्कृतस्तोत्रमालावत् एते अपि हृदयावर्जकाः भक्तिपोषकाः पारायणे वर्तन्ते। भगवतैव प्रेरिताः एव एतान् निर्मान्ति इति विशेषं स्वयं कथयन्त्येव। प्राकृतभाषायामपि एकं स्तोत्रं अच्युतशतकं इति नाम्ना विदितं वर्तते।

**रहस्यग्रन्थाः -** संस्कृतं द्राविडं च समालोड्य मणिप्रवालपद्धत्या रचिताः येषु रहस्यमन्त्राणाम् अर्थाः निरूप्यन्ते। एते त्रिंशदधिकाः। तत्र च रहस्यत्रयसारः इति ग्रन्थरत्नं सर्वमान्यं मनुष्याणां जीवनमार्गम् उद्देश्यं च निरूपयति। एवं स्वावतारवैभवेन, कृतिवैभवेन अस्मान् उज्जीवयन्ति एते। एतेषाम् अवतारमहोत्सवः **प्रतिवत्सरं श्रीवेङ्कटेशस्य ब्रह्मोत्सवे तीर्थदिने आपतति। तदानीं भगवतः उत्सववैभवम् अनुरुध्य समनन्तरमासे एव तिरुपतिक्षेत्रे भगवतःश्रीगोविन्दराजस्य उत्सववैभवपुरस्सरं श्रीवेदान्तदेशिकसंनिधौ आचर्यते।**





# त्रिविधं नरकद्वारम्

तेलुगु मूलम् - डा।। वैष्णवांघ्रि सेवकदासः
संस्कृतानुवादकर्त्री डा.(श्रीमती) एम्.प्रफुल्ला
चरवाणी - ९४४०२८५९८५



**प्रा**यशः सर्वेजनाः स्वर्गं नरकं इति लोकद्वयं उपश्रुण्वन्ति। ये जनाः स्वर्गं यान्ति ते सुखाननुभवन्ति इति, अपि च ये जनाः पापानि कुर्वन्ति ते नरकं प्राप्नुवन्ति इति सर्वे जानन्ति। तथापि पापानि कुर्वन्ति। वस्तुतः नरकलोके कस्य कस्य पापस्य कः कः दण्डः विधीयते इति श्रीमद्भागवते सुस्पष्टतः उक्तः। श्रीमद्भागवते पापानां दण्डाः विस्तरेण उक्ते सति श्रीमद्भगवद्गीतायां पापानां नरकं कथं प्राप्यते इति स्पष्टीकृतम्। इदं युवानः सुष्ठु जानीयुः। ये निरन्तरं पापानि कुर्वन्ति ते तच्छीलाः भवन्ति। तथा च नरककारणकार्याचरणानां, नारकीयस्वभाविनां एताद्दशकार्यं सहजमेव। ताद्दशकार्याचरणात् नरकं प्राप्नुवन्तीति ते न जानन्ति।

नरकलोकस्य त्रीणि द्वाराणि विद्यन्ते इति भगवान् श्रीकृष्णः श्रीमद्भगवद्गीतायां अवदत्।

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।
कामः क्रोधस्तथा लोभः तस्मादेतत्त्रयं त्यजेत्।।
भ.गी.१६-२१

साक्षात् भगवान् स्वयं मानवकल्याणाय, श्रेयसे च अत्यन्तप्रधानं प्रबोधनं अकरोत्। वस्तुतः कामक्रोधलोभाः सहजाः इव दृश्यन्ते अपि ते नरकद्वाराः। अर्थात् ये जनाः तेषु द्वारेषु पादन्यासं कुवन्ति ते नरकं प्रविशन्ति। नरकलोकः एकः अपि प्रवेशद्वाराणि त्रीणि सन्ति। एकेन द्वारेण अपि नरकप्राप्तिः चेत् त्रिभिः द्वारैः प्रवशिन्तस्य जनस्य स्थितिः अचिन्त्या। प्रायेण कामशब्दः मैथुनेच्छायां प्रसिद्धः अपि अनुपसंहत वाञ्छा इत्यर्थं वक्तव्यम्। अद्यतनकाले जनाः अधः पतन्ति। कामवाञ्छावशात् भाविनिकालं पणन्ते इति बोधनीयम्। अतः अस्मिन् विषये गुरवः प्रमुखपात्रं गृहीत्वा जनान् रक्षेयुः। नरकद्वारप्रवेशं रोधयेयुः। साधुसांगत्यकल्पनया कामवाञ्छात् बहिः निर्गच्छति। सत्सांगत्यराहित्यत्वात् कामवाञ्छावशः भवति इति गवेषकाः वदन्ति।

कोपः द्वितीयं द्वारं इत्युक्तम्। अनुपसंहृतकामादेव क्रोधः जायते। यदि हितैषिणः कामवशवर्तिनां कामवाञ्छां वारयन्ति तेभ्यः कृध्यन्ति जनाः। ये स्वस्य आनन्दं उपरुध्यन्ति, क्रोधात् तान् हन्तुं अपि उद्युक्ताः भवन्ति। क्रोधात् वैरं, कलहः, हत्या च संभवन्ति। ताद्दशाः परिणामाः इदानींतन जीवितं नरकप्रायं कुर्वन्ति। अथ जन्मान्तं प्रति किं वक्तव्यम्। कोपात् शरीरे अनेकाः व्याधयः संभवन्ति। अतः जनः कोपस्य अवकाशं न यच्छेत्। कदापि कोपं प्रदर्शनीयः भवति। तादृशकोपं केवलं प्रदर्शनार्थमेव न तु आपन्नं कोपम्। तस्मात् भयं न विद्यते। तृतीयं नरकद्वारं लोभः। नाम सर्वं स्वायतं भवेदिति, किञ्चिदपि पराधीनं न स्यादिति भावना। लोभात् प्रेमा, आत्मीयता, स्नेहः सामाजिकजीवनं, बान्धव्यानि नश्यन्ति। अतः सर्वे अस्मिन् विषये सावधानाः भूत्वा गीतोपदेशं आदरेण लक्षयेत्। कामक्रोधलोभाभ्यः दूरे स्थित्वा प्रमादरहितं प्रशान्तजीवितं जीवति चेत् तस्य नरकप्रवेशावकाशं न विद्यते। तस्मात् आगामि जन्मनि च सुखमयानि भविष्यन्ति। एतत् श्रीमद्भगवद्गीतया प्राप्तं अद्वितीयं वरम्।



## तिरुमल
## श्रीवेङ्कटेश्वरस्वामिनः नवरात्रि ब्रह्मोत्सवः
२०२० अक्टोबर् १६ तः २४ पर्यन्तम्



१७-१०-२०२०
स्थिरवासरे

प्रातः
लघुशेषवाहनम्



रात्रौ
हंसवाहनम्



१८-१०-२०२०
भानुवासरे

प्रातः
सिंहवाहनम्



रात्रौ
मौक्तिकमण्डपम्

तिरुमलतिरुपतिदेवस्थानम्

## तिरुमल
## श्रीवेङ्कटेश्वरस्वामिनः नवरात्रि ब्रह्मोत्सवः

२०२० अक्टोबर् १६ तः २४ पर्यन्तम्



१९-१०-२०२०
इन्दुवासरे

प्रातः
कल्पवृक्षवाहनम्

रात्रौ
सर्वभूपालवाहनम्





२०-१०-२०२०
भौम्यवासरे

प्रातः
आन्दोलिकासेवा

रात्रौ
गरुडवाहनम्



तिरुमलतिरुपतिदेवस्थानम्

तिरुमल
श्रीवेङ्कटेश्वरस्वामिनः नवरात्रि ब्रह्मोत्सवः
२०२० अक्टोबर् १६ तः २४ पर्यन्तम्

२१-१०-२०२०
सौम्यवासरे

प्रातः
हनुमद्वाहनम्

रात्रौ
गजवाहनम्

२२-१०-२०२०
बृहस्पतिवासरे

प्रातः
सूर्यप्रभवाहनम्

रात्रौ
चन्द्रप्रभवाहनम्








श्री अनीलकुमार् सिंघाल् ऐ.ए.एस्., महोदयेभ्यः
४-१०-२०२० दिनाङ्के
ति.ति.दे. संपूर्णकार्यनिर्वहणाधिकारित्वेन
भाध्यताः स्वीकुर्वन्तः
श्री आकेपाटि वेंङ्कट धमरिड्डि ऐ.डि.ई.एस्. महोदयाः।

श्री आकेपाटि वेङ्कटधर्मारेड्डि ऐ.डि.ई.एस्. महाभागेभ्यः १०-१०-२०२० दिनाङ्के ति.ति.दे. कार्यनिर्वहणाधिकारित्वेन भाध्यताः स्वीकुर्वन्तः डा.के.एस्.जवहर्रेड्डि ऐ.ए.एस्. महोदयाः।







# श्रीमद्वरवरमुनीन्द्र
# वैभवम्

- जी.राघुरामन्, चरवाणी - ८१९०९०१८९६

श्रीशैलेशदयापात्रं धीभक्त्यादिगुणार्णवम्।
यतीन्द्रप्रवणं वन्दे रम्यजामातरं मुनिम्।।

जगति सन्ति च बहूनि मतानि, सन्ति च नानाविधाः संप्रदायाः। तथापि सत्स्वप्येतेषु संप्रदायव्रात्येषु श्रीसंप्रदायख्यातिमतिशयिततया दिदगन्तेषु स्वयं स्वशिष्योत्तमैश्च प्रापितवन्तो विराजन्तेऽस्माकं कुलधनाः श्रीसंप्रदायशिरोमणयोऽपरवतारभूताश्चास्मद्यतीश्वराणां श्रीमद्रामानुजाचार्याणां, विशदवाक्शिखामणि-प्राप्तबिरुदाश्चैते यतीन्द्रप्रवणाः कुरुकापुर्यां लब्धजनयश्चोत्तमे मूलर्क्षे जैत्रजिह्वेय शदाससमाह्वयस्वामिनाङ्हे दशमेऽहनि प्राप्तनामानो वरवर इति स्वीयगुणानुरूपं, बाल्ये एव पितुः सकाशात् प्राप्तसकलशास्त्रविद्याः सुखमूषुः यथा कश्चन श्लोकः

मूलर्क्षे श्रीनगर्यामुदयमधिगतो जैत्रजिह्वेशदासात्
तस्मात्तापादिपूर्वं रुचिरवर इति प्राप्तनामा गुणैः स्वैः।
तिष्ठन् ग्रामे कडारे कतिचन शरदो मातुलावासभूते
साङ्गोपाङ्गोणमङ्गो द्रमिडनिगमवित् प्राप दारानुदारान्।।

इत्यनेन श्लोकेन स्पष्टं यत् वरवरमुनीन्द्रोऽयं कडारनामके ग्रामे स्वमातुलावासे लब्धशङ्खचक्राङ्कः पितुस्सकाशादधीत्य चाखिलान् साङ्गोपाङ्गान् वेदान् द्रमिडोप-निषदश्चशान्तेऽनुकूलां भार्यां परिणिन्युरिति। तदन्तरं गुरुसार्वभौमश्रीमल्लोकाचार्याणामष्टादशरहस्यग्रन्थेषु विद्यमाननं त्रयाणां दिव्यग्रन्थरहस्यानां यथा मुमुक्षुप्पडि-तत्त्वत्रयं-श्रीवचनभूषणानाञ्च व्याख्याः विशिष्टाः समुल्लसन्ति एतेषामाचार्याणाम्। अपि चादीयसेन श्रीमल्लोकाचार्यावरजेन श्रीमदभिरामाभिधानगुरुवरेण अनुगृहीतस्याचार्यहृदयाख्यस्य ग्रन्थरत्नस्यापि व्याख्यां नितरां विशिष्टेन चक्रुरिति लोकविदितः विषयः।

चतुर्णामपि एतेषां रहस्यग्रन्थानाम तिमधुरगर्भारण्याख्याप्रणेतारः श्रीमद्वरवरमुनिन्द्राः। ये हि साक्षात् रङ्गनाथभगवतोपश्लोकिताः श्रीशैलेशः इति श्लोकेन। महागुरोरस्य दिव्यमङ्गलविग्रहो दिव्यान्तरङ्गश्च शुद्धसत्वैकनिकेतनं विरराजेति सुष्ठु प्रख्यापयति एतेषां व्याख्याः विमर्शकुशलता, निरूपणनिपुणता, उपपादनचातुरी, वाग्विदग्धता, प्रधानसूक्ति संघटनसमर्थता इत्यादिगुणविशेषाः अजस्रं समुल्लसन्ति स्वामिसूक्तिषु।

### वरवरमुनेः यतीन्द्रप्रवणाबिरुदप्राप्तिः -

श्रीशैलनाथार्यः कदाचन भगवद्भाष्यकारगुरुवरगुणानुसन्धाननिरतः यतिपतेस्तस्य श्रीशठकोपमुनीन्द्र पदाब्जभक्तिं तदीयदिव्यसूक्त्यर्थ सुधास्वादनानुभवं मुहुरनुचिन्तयन् श्रीकुरुकापुर्यायां श्रीरामानुजमुनेस्तस्य पृथगालयप्रतिष्ठापनमत्यावश्यकम् इत्यध्यवस्यन् तद्दिव्यालयप्रतिष्ठानपूर्वकं श्रीरामानुजचतुर्वेदिमङ्गलनामकमग्रहारं च परितः प्रतिष्ठाप्य

तत्र वैष्णवभक्ताग्रेसराणां नित्यवासं च प्रकल्प्य सम्पदमिमां सर्वां श्रीमद्वरवरगुरोराधीन्यं कुर्वन् गुरुवरोऽपि भगवद्भाष्यकारचरणारविन्दप्रेम्णा तत्रत्यसकलकैङ्कर्यनिर्वहणधुरन्धरो विरराज। भाविनि ततः तत्प्रेमातिशयं सौम्यजामातृमुनेः भगवति रामानुजमुनौ दृष्ट्वा श्रीशैलनाथार्य देशिकेन्द्राः स्वान्तेवासिनं श्रीमद्वरवरमुनिं तदीयगुणानुरूपं यतीन्द्रप्रवण इति नामधेयं चकार। नैरन्तर्येण वरवरगुरोः श्रीमति यतीन्द्रे निरवधिकातिशयं प्रावीण्यं दृष्ट्वा तदेव नाम प्रसिद्धं भेजे। यदासौम्यजामातृमुनेः श्रीभग्वद्रङ्गनाथप्रदत्ततदीयतनियन् मध्येऽपि भगवान् स्वयं रङ्गनाथः स्वचार्यं श्रीमद्वरवरमुनीन्द्रं 'यतीन्द्रप्रवणं वन्दे' इति स्तौति-

**श्रीशैलेशदयापात्रं धीभक्त्यदिगुणार्णवम्।**
**यतीन्द्रप्रवणं वन्दे रम्यजामातरं मुनिम्॥**

इत्यस्मिन् श्लोके। अनेनाचार्यस्य भगवद्रामानुजे प्रीतिर्लोके विदिता भवति।

श्रीचरणानां तुर्याश्रमस्वीकारः महता कालेन द्वितीयमाश्रममलङ्कृत्याचार्यवर्यो जायमानो हि पुरुषो ब्राह्मणस्त्रिभिः ऋणवा जायते, ब्रह्मणचर्येणर्षिभ्यो, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः, इत्याम्नायरीत्या चतुर्थकमपि ऋणं गुणवता पुत्ररत्नेनैकेन समुत्पन्नेन स्वात्मना निराकरोत्। अथ स्वगोत्रे दायादीनां बाहुल्येन असकृज्ञाताशौचमृताशौचादिना प्रवचनप्रत्यूहं भगवत्कैङ्कर्यसान्तरायं च समधिकं शोचणीयमवेक्षमाण उत्तमाश्रयं स्वीचिकीर्षुः। तदात्वे तत्र सन्निहितेन सदानुष्ठान सम्पन्नेन परमहंसपरिव्रजिकाचार्यश्रीशठकोपयतीन्द्रेण सत्सम्प्रदायनिरतेन स्वीकारिततुर्याश्रमस्सन् काषायशोभीकमनीयशिखात्रिदण्डसमुल्लसितो भूत्वा भगवते रङ्गनाथाय मङ्गलाशासन्या शासितुमुपससर्प दिव्यालयम्।

तमिमं गुरुवरेण्यं साक्षाद्भाष्यकारमेव प्रतिपाद्यमानः श्रीरङ्गरमणः सुप्रसन्नकटाक्षवीक्षया पुनानः पुरातनं तदेव स्वकीयं दिव्यनाम मुनिपदसनाथं वोढुमाज्ञाप्य पल्लवरायमठनाम्ना प्रथितं स्थानविशेषं नित्यवासयोग्यमुपकल्प्यः परिजनपरिच्छदैस्सह तत्रैव प्राहैषीत्। यदिदानीं श्रीरङ्गे श्रीवरवरमुनिसन्निधिव्यपदेशभाजनं मन्दिरं तदेवैतत्। अथ मुनिसार्वभौमः भगवदप्रतिमकरुणां स्मारं स्मारं पुलकिताञ्चितदिव्यगात्रः कोऽयमपदे निरङ्कुशकृपाप्रवाहः 'कोऽयमपदे निरवग्रहानुग्रहभूमा' इत्येवमामम्रेडयन् भगवत्पारितोषात्मकं तमेव मठमलङ्कृत्य श्रीमन्नाथयामुनयतीश्वरकूराधिनाथभट्टारकाद्याचार्यवर्य संदर्शनविरहजाद् दुःखादधुनैव व्यमुच्यामहि। इति सानन्दमनुसंदधानया शिष्यमण्डल्या नित्यं नानादेशविशेषेभ्यः आगच्छन्त्या च श्रीवैष्णवमण्डल्या परिचर्यमाणपादारविन्दयुगलः प्रचकाशे।

**अष्टदिग्गजाख्यशिष्यवर्गप्रतिष्ठापनम् -** यद्यपि श्रीचरणचरणारविन्दसंश्रयणपराः शिष्यप्रवराः परस्सहस्राः प्रथिताः, तथापि तेषु प्रधानपरिगणिताः अष्टदिगाजाख्यया प्रख्याताः अमी। श्रीचरणैः आचार्यपीठे प्रतिष्ठापिताः- १, श्रीतोताद्रियतीन्द्रपादाः, २. श्रीभट्टनाथयतिवराः ३. एरुम्बियप्पानामानो देवराजगुरुवराः ४. श्रीवेङ्कटनाथरामानुजयतिवराः ५. प्रतिवादिभयङ्करगुरुवराः, ६. कोयिलण्णनितिसमाख्याताः वरदनारायणवर्याः ७. अप्पिळ्ळैगुरवः ८. अप्पिळ्ळार् गुरवः। एतेषु महानुभावेषु उत्तमाश्रमिणः त्रयः, गृहमेधिनः पञ्च।

**वैभवोपसंहारः -** भागवद्रामानुजमुनीन्द्राणामिव श्रीमद्वरवरमुनीन्द्राणामपि वैभवम् अप्रमेयमहोदधिकल्पम्। अतो यावदपेक्षितमात्रानुभूतम्। असाधारवैभवोपेते साधारणाब्दे तुलामासि मूलर्क्षे समवतीर्णा अमी गुरुचरणाः रुधिरोद्गारिसंवत्सरे कुम्भमासकृष्णद्वादश्यां श्रीवैकुण्ठनाथस्य भगवतो यथायथं तल्पभावमासेदुरितु वैकुण्ठयात्रावृत्तान्ते स्थितेऽपि अद्यापि भक्तजनमन्दिरम लङ्कुर्वन्तीति महन्मङ्गलाशासनमाशास्महे।









# नवरात्रिमहोत्सवः

- डा.उमादेवी

चरवाणी -९९५१७३४४९४

प्रतिसंवत्सरं आश्वयुज-शुक्ल-प्रतिपदारभ्य विजयदशमी पर्यन्तं श्रीदेवी नवरात्रिमहोत्सवः प्रचलति। एष महोत्सवः साङ्गोपाङ्गं देवीमाहात्म्ये अभिवर्णितमासीत्। तत्र श्रीदुर्गादेव्याः अवतारविशेषाः महिमा विशेषश्च सम्यक् निगदिताः। देव्याः उत्सवस्य आचरणेन कथा श्रवणेनच जनेषु भक्तिभावः उत्पद्यते।

श्रीदुर्गादेव्याः पूजाविधानं सात्विक, राजस, तामस बेधेन त्रिविधं भवति। (१) जपयज्ञाः - निरामिषपदार्थैर्नैवेद्येन क्रियमाणा पूजा सात्विकपूजा २. बलयः - सामिष पदार्थैः नैवेद्येन क्रियमाणा पूजा राजस पूजा। (३) जपयज्ञान् विना सुरामांसादि उपहारैः क्रियमाणा पूजा तामस पूजा। उत्तर भारतदेशे प्राधान्येन वंग राष्ट्रे अजामहिषादिभिः बलिभिः एषा पूजा राजस तामस विधानाभ्यां क्रियते। तथापि क्रमेण एतत् पूजा विधानं प्रचारात् अपसृतं भवति। सात्विकविधानं अनुसृत्यैव देशे सर्वत्र देवी पूजा प्रचलति। तत्रापि देशभेदमनुसृत्य विविधाः सम्प्रदायाः सञ्जाताः। देव्याराधकः उपासकः आश्वयुजशुक्लप्रतिपदि दीक्षां स्वीकृत्य कलशस्थापनं कृत्वा दुर्गादेव्याः मूर्तौ तत्र आवाहनं कुर्यात्। तत्रारभ्य नवमी तिथि पर्यन्तं दीक्षया देवी पूजां कुर्यात्। नवम्यां रात्रौ दीक्षा परिसमाप्तिं एष्यति। तत्र तत्र श्री चक्रपूजा (नवावरण पूजा) प्रधानां गत्वेन वर्तते। नवरात्रोत्सव दिनेषु कन्यका पूजा अथवा सुमंगलीपूजा प्रचलति। चण्डी होमैः विशेष पूजा विधिभिः एतत् नवरात्रि पूजा विधानं परिसमाप्यते, दशम्यां तिथौ प्रातः काले एव देवी प्रस्थानं (उद्वासनं) करिष्यन्ति। देशभेदान् प्रान्तीयभेदान् अनुसृत्य बहवः सम्प्रदायाः प्रचरन्ति। हेमाद्रिः इत्यादिभिः व्रत कल्पकारैः उक्तस्य सारांशं धर्मसिन्धुकारः एवमाह। मूलानक्षत्र दिने सप्तम्यां सरस्वतीपूजां कुर्यात्। मूला नक्षत्रे देव्याः आवाहनं कृत्वा पूर्वाषाढायां संपूज्य उत्तराषाढायां बलिदानं कृत्वा श्रवणा नक्षत्रे विसर्जनं कुर्यात्।

**मूलेन स्थापनं देव्याः पूर्वाषाढासु पूजनम्।**
**उत्तरासु बलिं दद्यात् श्रवणेन विसर्जयेत्।।**

''आश्विने शुक्लपक्षेतु कर्तव्यं नवरात्रकम्। प्रतिपदादि क्रमेणैव यावद्धि नवमी भवेत्। आश्वयुज शुक्ल प्रतिपदारभ्य नवमी पर्यन्तं नवरात्रोत्सवः कर्तव्य इति धौम्यवचनम् -

**आश्विने मासे संप्राप्ते शुक्लपक्षे विधेः स्थितिम्।**
**प्रारभ्य नवरात्रंस्यात् दुर्गापूज्यातु तत्रवै।।**

अस्मिन् नवरात्रे दुर्गादेवी पूज्येति रुद्रयामळे प्रोक्ता। देवी पुराणेपि एतद् विधानं कथितम्। अस्मात् कारणात् नवरात्रं इत्युक्ते शरद् कालिकस्यदेवी नवरात्रस्य रूढं भवति। इदं नवरात्रिव्रतं नवसुदिनेषु, सप्तसुदिनेषु. पञ्चसुदिनेषु, त्रिषुदिनेषु, एकस्मिन् दिनेपि आचरितुं शक्यते। भविष्यपुराणे एवं वर्तते - ''त्रिरात्रं वापि कर्तव्यं सप्तम्यादि यथा क्रमम्'' नवरात्रिषु कर्तव्यस्य देवी पूजनस्य देव्याः उत्पत्तिमधिकृत्य च मार्कण्डेय पुराणे देवीमाहात्म्य वर्णने एवं वर्तते। विष्णोः

विजयप्रदात्री महामाया दशहस्तैः दशपादैः कृष्णवर्ण देहकान्त्या युक्ता, अतः सा महाकाली इत्युच्यते। दुर्गादेव्याः अयं प्रथमावतारः।

महामाया महिषासुरमर्दिनी रूपेण द्वितीयम् अवतारं प्राप्नोत्। तदा महिषनामकः महिष मुखः राक्षसः वर गर्वेण सर्वान् देवान् अजयत्, ब्रह्मविष्णवोः मुखाभ्यां क्रोधात् ज्वालारूपेण महाशक्तिः उद्भूत्। सा सिंहवाहनारूढायुद्धे महिषासुर संहारं अकरोत्। अस्याः देव्याः महालक्ष्मी इत्यपि नामान्तरं वर्तते। दुर्गादेव्याः तृतीयावतारे महासरस्वती इति नाम आसीत्। शुम्भनिशुम्भ राक्षसौ देवान् जित्वा हिमालयपर्वतं गत्वा देवी मुद्दिश्य तपम् आचरन्तौ आस्ताम्। एकदा देवी पार्वती गङ्गास्नानं कर्तुं गमनसमये तस्याः देहात् एका दिव्यसुन्दरी उद्भूता। शुम्भः मोहवशाद् तां परिणेतुं सुग्रीव नामकं प्रतिनिधिं तस्याः सकाशं प्रेषितवान्। शुम्भस्य अभिप्रायं ज्ञात्वा सा तिरस्कृता। ततः शुम्भः कोपं प्राप्तः धूम्रलोचननामकं स्व सैन्याध्यक्षं सैन्येन सह तत्र प्रेषयित्वा ''देवीं बध्वा मत्समीपं आनयतु'' इत्याज्ञप्तवान्। सादेवी राक्षस सैन्यं अवधीत्। अनन्तरं शुम्भः सैन्येन सह चण्डमुण्ड राक्षसौ युद्धाय प्रेषयामास। संग्राम समये दुर्गादेव्याः फालभागत् अरुणाक्षी कालीदेवता उत्पन्ना तया राक्षससैन्यं सर्व निहतमासीत्। तदा आग्रहेण कोपाविष्टौ चण्डमुण्डौ देव्या भयंकर संग्रामं चक्रतुः। सादेवी चण्डस्य शिरः छित्वा मुण्डं शूलेन निहतवती। सा काली तयोः शिरसि गृहीत्वा देव्याः समक्षे समर्पितवती। अनन्तरं सादेवी कालिकां चामुण्डेति नाम्ना लोके प्रसिद्धा पूजनीया भविष्यसि इत्यब्रवीत्। चण्डमुण्डयोः मरणानन्तरं शुम्भनिशुम्भ राक्षसौ महता सैन्येन देव्या युद्धम् अकुरुताम्। ताभ्यां साकं रक्तबीज नामकोपि राक्षसः युद्धाय समुपस्थितः। प्रथमं कालिका देवी रक्तबीज राक्षसं हत्वा तस्य रक्तं पिबन्ती शुम्बनिशुम्भ राक्षसावपि जघान। चतुर्थावतारे दुर्गादेवी नंदगृहे नंदनाम्ना सञ्जाता, वसुदेवः बालकृष्णं रहसि कारागारात् स्वीकृत्य रेपल्ले ग्रामे नंदगृहे परित्यज्य तस्य पुत्रिकां नन्दाम् आनीय तां कारागारे स्वपुत्रिकात्वेन स्थापितवान्। कंसः ताम् बालिकां हन्तुं ऊर्ध्व भागे विसृष्टवान्, तदा सा बालिका ऊर्ध्व भागे शून्यप्रदेशे स्थित्वा ''तव प्राण हर्ता शत्रुः नन्दगृहे सुखेन जीवति'' इत्युक्त्वा अदृश्या अभवत्। पञ्चमावतारे दुर्गादेव्याः रक्तदन्ती इति नाम आसीत्। एकस्य राक्षसस्य शरीरस्य छेदनात् देव्याः दन्ताः रक्तसिक्ताः अभूवन्, तस्मात् कारणात् देव्याः रक्तदन्तीइति नाम प्रसिद्धम् अभूत्। षष्ठावतारे दुर्गादेव्याःशाकम्भरी नाम प्रसिद्धं सञ्जातम्। पूर्वम् एकस्मिन् समये अनावृष्टिकारणात् धान्यसमृद्धेः अभावात् एकशतवत्सर पर्यन्तं जनाः क्षुद्बाधया पीडिताः आसन्। तदा दुर्गादेव्याः प्रसादात् जनानां शाकाः फलानि च सम्प्राप्तानि इति कारणात् देव्याः शाकम्भरी इति नाम व्यावहारे अवर्तत। सप्तमावतारे दुर्गादेवी दुर्ग नामकं राक्षसं निहतवती, तस्मात् दुर्गेति, अष्टमावतारे मातंगी इति नवमावतारे भ्रामरीइति नामानि प्रसिद्धानि अभूवन्। दुर्गादेवी अरुण नामकं राक्षसं भ्रमराणां साहाय्येन हननात् भ्रामरी नाम्ना प्रसिद्धिः अभूत्।

**विजयदशमीः** - नवरात्रौत्सवानाम् अनन्तरम् आश्युजशुद्धदशम्यां वयं विजयदशमी महोत्सवम् आचरामः। अस्य **'दशरा'** तथा दशहराः इत्यपि व्यवाहर अस्ति। अस्मिन् दिने प्रातःकाले जनाः इष्टदेवतापूजां कृत्वा सायंकाले महता उत्साहेन सर्वे भेरी डमरुक मृदंगादिभिः ग्रामसीमांगत्वा तत्र शमीवृक्षं सम्पूज्य पुनः उत्साहेन ग्रामं प्रविषय ज्ञान वयोवृद्धानां नमस्कारं कृत्वा आशीर्वादं स्वीकुर्युः। नमस्कारात् पूर्वं शमीपत्रं ज्येष्टभ्यो दत्वा ''शमी शमयते पापं शमी शतृ विनाशनी। अर्जुनस्यधनुर्धारी रामस्य प्रियदर्शनी। इति श्लोकं पठेयुः। उत्तरभारतदेशे रावण कुम्भकर्णयोः चित्रपटे यात्रारूपेण बहिः प्रदेशं (मैदानं) आनीय तत्र उपस्थाप्य दहनं कृत्वा विनोदं प्राप्नुयुः। अस्य उत्सवस्य रामलीला इत्यभिधानमस्ति। कालिकापुराणे एवं वर्तते महानवम्यां रावणः निहत इति कारणात् सर्वेदेवाः रामस्य कृतज्ञतापूर्वकं दुर्गादेव्याः विशेष पूजां चक्रुः। दशम्यां दुर्गादेव्याः विसर्जनं कृतवन्तः अतः विजयदशमी इति प्रसिद्धिः सञ्जाता। पाण्डवाः अज्ञातवास समये शमीवृक्षे निक्षिप्तान् धनुर्बाणान् इतरान् आयुधान् स्वीकृत्य कौरवैः संग्रामं कर्तुं प्रश्थिताः। लोके जनाः परिश्रमेषु विविधव्यापारेषु च विविधान् यन्त्रान् बहूनि उपकरणानि यन्त्रसामग्रीः पूजयन्ति। देव्याः अनुग्रहात् विजयं लाभम् अभिवृद्धिं च प्राप्नुवन्ति।

कलियुगे पुराणकालात् प्रभृति एतावत् कालपर्यन्तं स्थितान् सुरथ वैश्यादीन् भक्तजनान् दृष्टान्तत्वेन स्वीकृत्य इदानीन्तन कालिकैः जनैरपि त्रिमूर्त्यात्मिका श्री दुर्गादेवी न केवलं व्रतदिने परन्तु सर्वकालं शाक्तागमानुसारेण पूजनीया भवति। भक्तिश्रद्धाभ्यां तस्याः आराधनेन सर्वेषां जनानां इष्टकाम्यार्थसिद्धिः भवति भविष्यति च।





# अन्नमाचार्यजीवनचरित्रम्

तेलुगु मूलम् - डा.मन्नूरु शिवप्रवीण्,
संस्कृतानुवादः- एम्.नागमाधुरी कामेश्वरी,
चरवाणी - ९४४०८४८८५८

**अहोबिलयात्रा -**

विवाहात्परमन्नमाचार्यः वेदान्तविद्यामभ्यसितुम् अहोबिलक्षेत्रं गतवान्। तत्र वैष्णवाचार्यः शठकोपमुनेः सकाशे वेदान्तविद्यामभ्यसितवान्। ब्रह्मविद्यामधिगतवान्। तदारभ्य प्रतिदिनं श्रीहरेः पूजन, सेवन, कीर्तन, चिन्तन, ध्यानादि कार्यैः एव अन्नमाचार्यः कालं यापयन्नासीत्।

**सङ्कीर्तनायज्ञम् :-** श्रीवेङ्कटेश्वराय समर्प्यमाणाः कैङ्कर्याः एव तस्य भोगत्वेन अन्नमाचार्यः भावयति स्म। वाल्मीकि रामायणे स्वऽशक्तिवशात् रामायणकथाः सङ्कीर्तनान्यिव गायति स्म। तस्य गानामृतस्य श्रोतारः अन्नमाचार्यः तुम्बरः वाः नारदः अथवा गन्धर्वः स्यात् न तु सामान्यमानवः इति अन्नमाचार्यं कीर्तयन्ति स्म।

**सालुवनरसिंहरायः -** ताल्लपाक समीपे विद्यमानस्य टंगुटूरु पट्टणस्य परिपालकः, सङ्गमवंशराजप्रतिनिधिः सालुवनरसिंहरायः अन्नमाचार्य गानामृतधाराविषये श्रुत्वा तादृशस्य महात्मनः दर्शनं करणीयमिति मत्वा अन्नमाचार्य समीपं गत्वा गौरवपुरस्सरमभिवादं कृतवान्। ''मया सह आगत्य ममास्थानं पावनं कुर्वन्तु'' इति अन्नमाचार्यं प्रार्थितवान् सालुवनरसिंहरायः। वैष्णुवभक्तो न तिरस्कार्यः इति अन्नमाचार्यः तस्य प्रार्थनामङ्गीकृत्य तेन सह तस्यास्थानं गतवान्। तत्र विद्यमानः चेन्नकेशवस्वामिनः दर्शनं कृत्वा, देवालयसमीपे विद्यमान आवासे प्रविष्टवान् अन्नमाचार्यः। तदारभ्य नरसिंहरायः अन्नमाचार्यं हितैषी, बन्धु, गुरुरिति भावयन् सादरमादरति स्म। प्रत्येकमपि कार्यमन्नमाचार्यमुक्त्वैव करोति स्म। अन्नमाचार्याशीर्वादबलेन पेनुगोण्डां गत्वा राज्यपालनं कृतवान्। अन्नमाचार्यं तत्राहूय, सत्कृत्य जनरञ्जकानि श्रीवेङ्कटेश्वर कीर्तनन्यालाप्य मां कृतकृत्यं करोतु इति प्रार्थितवान् नरसिंहरायः।

येमोको........ इति गीतं नरसिंहरायः प्रार्थनया अन्नमाचार्यः तस्य गानामृतेन श्रीवेङ्कटेशाङ्कितानि सङ्कीर्तनानि सङ्कीर्त्य, श्रावितवान्। तदा मधुरिव, इक्षुरसमिव, मलयमारुतमिव, कर्पूरसुगन्धमिव, कर्णाभ्यामतृतधारा इव विद्यमानमन्नमाचार्यगानामृतं श्रुत्वा मुग्धो जातः सालुवनरसिंहरायः। अहो! अद्भुतम् इति अन्नमाचार्यं स्तुवान् बहुधा कीर्तितवान्, बहुधा सत्कृतवान्। तदारभ्य सालुवनरसिंहरायः प्रतिदिनं श्रीवेङ्कटेश्वरं स्तुवन् अन्नमाचार्येण सङ्कीर्त्यमानानि गीतानि श्रुत्वा कालं यापयति स्म।

एकदा नरसिंहरायः राजरिक स्वतः सिद्ध तामसबुध्या यथा वेङ्कटेश्वरं स्तुवन्तः गायन्तः सन्ति तथैव मामपि स्तुवन्नेकं गीतं गायतु इति अन्नमाचार्यं पृष्टवान्। तस्य वाक्यं श्रुत्वैव अन्नमाचार्यः हरि! हरि इति वदन् ...

हरिः स्तुत्यमाना अनया रसनया अन्यं स्तोतुं न शक्नोमि। मां कथमेवं पृच्छसि इति। श्रीनिवासमतिरक्त्य अन्यमहं स्तोतुं न शक्नोमि, इति नरसिंहरायवचनं तिरस्करोति ''भवान्, भवतः स्नेहः'' मह्यं नापेक्षते इति तिरस्कृतवान्। अन्नमाचार्यवचनैः क्रुद्धः सालुवनरसिंहरायः अन्नमाचार्यं बन्धयन्तु इति सेवकान् आज्ञापयति। अन्नमाचार्यं बन्धयितुमनिच्छन्तोऽपि राजाज्ञापालनीयातिधिया अन्नमाचार्यं

बन्धयन्ति। आकटि वेल्ल ...... गीतम् इति सङ्कीर्तनालापनेन बन्धनानि विमुक्तानि। सैनिकाः भयभीतास्सञ्जाताः। भीत्या राज्ञः समीपं गत्वा विषयं विनिवेदितवन्तः। राज्ञो विश्वासः न जातः हसितवान् च। अन्नमाचार्य समीपमागत्य "किं सेवकान् वञ्चयसि? भवान् किमपि वा करोतु अहं त्वं न त्यजामि। इति पुनः बन्धयितुं सेवकान् आदिशति नरसिंहरायः।

प्राग् आलापितमेव गीतं पुनः आलापयति अन्नमाचार्यः पुनः बन्धनान्यधः पतितानि। अस्मिन् पर्याये नरसिंहरायोऽपि भीतः। अन्नमाचार्यस्य पादयोः पतितवान्। अहं क्षन्तव्यः इति प्रार्थितवान्। तदा तं पश्चात्तापं दृष्ट्वा अन्नमाचार्यः"अद्यारभ्य हरिं कीर्त्यमानं व्यक्तिं परमपूज्यं भावय इति उक्तवान् अन्नमाचार्यः।

ध्यानेन कृतयुगे, यज्ञेन त्रेतायुगे, अर्चनेन द्वापरे, नामसङ्कीर्तनेन कलियुगे श्रीहरिः भक्तान् अनुगृण्हाति। अतः श्रीवेङ्कटेश्वरस्योपरि भक्त्या, तस्य स्वामिनः भक्तानामुपरि भक्त्या जीवतु इति अन्नमाचार्यः तिरुमलां प्रत्यागच्छति।

तिरुमलां प्रत्यागत्य अन्नमाचार्यः ५१६ द्विपदपादैः श्रृङ्गारमञ्जरी इति द्विपदकाव्यं विरच्य श्रीनिवासाय अर्पितवान्। अनेकैः सङ्कीर्तनैः सङ्कीर्तनवशात् अन्नमाचार्याय वाक्शुद्धिरागत्य, तस्य वचनाय दिव्यत्वमागतम्। क्रमेण अन्नमाचार्यः तिरुवेङ्कटनायकस्य श्रीवेङ्कटेश्वरस्य आस्थानगायकस्सञ्जातः।



## तिरुचानूरु
# श्री पद्मावतीमातुः वार्षिकब्रह्मोत्सवः
### १०-११-२०२० तः १९-११-२०२० पर्यन्तम्



| दिनाङ्कः | वासरः | प्रातः उत्सवः | रात्रि उत्सवः |
|---|---|---|---|
| १०-११-२०२० | भौम्यवासरः | लक्षकुङ्कुमार्चनम् | सेनापति उत्सवः, अङ्कुरार्पणम् |
| ११-११-२०२० | सौम्यवासरः | ध्वजारोहणम् | लघुशेषवाहनम् |
| १२-११-२०२० | बृहस्पतिवासरः | महाशेषवाहनम् | हंसवाहनम् |
| १३-११-२०२० | भृगुवासरः | मौक्तिकमण्डपम् | सिंहवाहनम् |
| १४-११-२०२० | स्थिरवासरः | कल्पवृक्षवाहनम् | हनुमद्वाहनम् |
| १५-११-२०२० | भानुवासरः | आन्दोलिकासेवा | गजवाहनम् |
| १६-११-२०२० | इन्दुवासरः | सर्वभूपालवाहनम् | गरुडवाहनम् |
| १७-११-२०२० | भौम्यवासरः | सूर्यप्रभवाहनम् | चन्द्रप्रभवाहनम् |
| १८-११-२०२० | सौम्यवासरः | रथोत्सवः | अश्ववाहनम् |
| १९-११-२०२० | बृहस्पतिवासरः | चक्रस्नानम् | ध्वाजावरोहणम् |



# पुराणेषु श्रीवेङ्कटाचलाधीशः

- डा.गङ्गिशेट्टि लक्ष्मीनारायण
चरवाणी - ९४९४२४८३४८

**भुकुति मुकुति यीव मत्कुल देवने**
**सकलर पालिप घनगुण पूर्णने।**
**विकसितनयन कमलकंजनाभने**
**प्रकटित शुभकीरुति यिन्दमेरेवने।।**

वैकुण्ठात् एनं शेषपर्वतं समागत्य अत्रस्थितश्रीवेङ्कटेश! भक्तरक्षणमेव तव लक्ष्यम्। (रक्षणार्थं रमाकान्तः रमते प्राकृतो यथा) भवान् अभयकरसिन्धुः भक्तिमुक्तिप्रदश्च भवति। मम कुलदैवतम् भवान् एव। सकलजनरक्ष्यमाणः भवान् घनगुणपूर्णः भवति। भवान् विकसितपद्मं नाभेः संसृष्ट्य कल्याणमशुभकीर्त्या प्रकाशति।

**ज्ञानिगळिगेगोचरने। अ । ज्ञानिगळिगगोचरने।**
**ध्यानिपरल्लि निल्लुवने बलु। दैन्यादिगळुद्दारने।**
**आनन्दमयने अनन्तावतारने। अनुदिनेनेवरहृदयमन्दिरने।**
**तनुविनक्लेशदुरितसंहरने। घनमणिभूषण शृङ्गारने।।**

ज्ञानिनां ज्ञानसाधनम् दैत्यानां मोहनार्थाय, सुराणां मुक्तिसिध्दये - इत्यादि पुराणवाक्यानुसारं हे श्रीनिवास! त्वम् ज्ञानिभ्यः गोचरः। (ज्ञानी मत्प्रियातमः) अज्ञानिभ्यः अगोचरः। ध्यानेनात्मनि पश्यन्ति ये च ध्यायन्ति तेषां हृदयमण्टपे प्रकाशमानः भवसि। त्वं दीनान् उध्दरसि। त्वम् आनन्दमयः अनन्तावतारश्च भवति। ये च त्वां स्मरन्ति तेषां हृदये स्थित्वा शरीरतापान् पापानि च दूरीकृत्य चिन्तामणिः इव प्रकाश्यमानः शृङ्गारपुरुषः।

**दृष्ट्वा दिशि दिशि स्वीयान् दयया पालयन्निव।**
**वर्तते विश्वतश्चक्षु र्वेङ्कटे वेङ्कटेश्वरः।।**

श्रीवेङ्कटेश्वरः चतुर्षु दिक्षु विद्यमानान् सर्वान् भक्तान् द्रष्टुम् एकोङ्कटाद्रौ अद्भुतरीत्या दण्डायमानो वर्तते।

श्रीपादरायवर्यकृतिषु **स्मरिसिदवरनु काव्य** इति अन्यत् कीर्तनम् एकं सुप्रसिद्धम् अस्ति। एतत् त्रिभिः चरणैः श्रीनिवासस्य तत्त्वं भक्तपराधीनतां च प्रकटयति।

**स्मरिसिदवरनु काव्यनम्म सूर्यानेक प्रभाव।**
**सुरमुनिगळसञ्जीवा सिरि। वेङ्कट एम्मनुपोरेव।।**

ये च श्रीनिवासं स्मरन्ति तान् श्रीनिवासः संरक्ष्य अनेकसूर्यकान्तिभिः प्रकाशति। अयं श्रीवेङ्कटेश्वरः मुनिभ्यः सञ्जीवनी भवति। लक्ष्मीयुक्तो भूत्वा भक्तान् रक्षति।

**वैकुण्ठदिन्दलिबन्दु।ई। शेषाचलदलिनिन्दु।**
**भकुतर पालिपे नेन्दु। अभयकरसिन्धु।।**

जयतु दोषविनाश। जय। जयतु महिमा विशेष।
जयतु लकुमि परितोष। जयतु श्रीवेङ्कटेश।
जय कमलज जनकने जयजगदीश।
जय गजवरद पालिप पुण्यनाम।
जयतु जनार्दन मोहन वेष जयरङ्ग विठल करुणाविलास।।

हे रङ्गविठल! श्रीनिवास! तुभ्यं जयोस्तु। त्वं दोषदूरः विनाशकश्च। भवान् महिमाविशेषयुक्तः लक्ष्मीपरितोषितगात्रः, ब्रह्मणः पिता, जगदीशः, गजराक्षकः, पुण्यश्लोकः जनार्दनः मोहनसौन्दर्यः करुणाविलासः भवति। भक्तिरसप्रबोधकम् एतत् कीर्तनं मोहनरागे गानं कृतं इति हेतोः द्विगुणीकृतः आनन्दः रसानुभूतिश्च प्राप्यते।

श्रीहरेः मूलरूप - अवतारपरूपयोः भेदः नास्तीति सिध्दान्तम् अनुसृत्य श्रीपादरायवर्याः श्रीवेङ्कटेशं नरसिंहं श्रीकृष्णं च कीर्तितवन्तः। एताः तिस्रः मूर्तयः क्रमशः कृत-त्रेता- द्वापरयुगेषु अर्चावताराः अभवन्।

कृते तु नारसिंहोऽभूत्
त्रेतायां रघुनन्दनः
द्वापरे वासुदेवश्च
कलौ वेङ्कटनायकः।।

इति पुराणवचनानुसारं श्रीपादरायवर्याः कठिनपदबन्धैः दीर्घचरणैः श्रीनिवासपरब्रह्मणि त्रिमूर्त्युपासनां कृतवन्तः।

सागि बारय्यनीनु। बागिनमिसुवे । योगिगळरसने श्रीनिवास।
भोगिशयनने निन्न भागवतरु बन्दु जागु माडदे निन्न बागिलोळु निति हरो।।

श्रीव्यासरायवर्यैः विरचिता श्रीनिवासस्तुतिः

ईशुमुनिगळिद्देनु माडिदरु व्यासमुनि मध्यमतव नुद्धरिसिद

एतावन्तः ज्ञानिनः सन्ति चेदपि व्यासरायवर्याः मध्वमतं समुध्दृतवन्तः इतिपुरंदरदासाः व्यासरायवर्यं स्तुतवन्तः।

मध्वाचार्यपीठमलङ्कृतेषु यतिषु सुप्रसिद्धाः एते ब्रह्मण्यतीर्थकमलसञ्जाताः सिरिकृष्ण इति पदाङ्कितेन कन्नडभाषायां असंख्याकानि कीर्तनानि भक्तिवैराग्यप्रबोधितानि व्यलिखन्। व्यासरायवर्याणां कीर्तनानि सङ्गीतलक्षणबद्धानि भजनसम्प्रदायानुसारं गातुं अनुकूलानिच भवन्ति। एते पुरंदरकनकदासयोः गुरुस्थाने विलसन्ति। तर्कताण्डवम्, न्यायामृतम्, चन्द्रिका इति ग्रन्थन् विलिख्य चन्द्रिकाचार्याः इति नाम्ना प्रसिद्धाः जाताः। **कृष्णा नी बेगनेबारो, जनुमजनुमदलि कोडुकण्डूय हरिये, अन्तरङ्गदलि हरिकाणदव हुट्टुकुरुडनो नमपार्वतीपतिनुतजनपाल -** इत्यादि कृतयः सुप्रसिद्धाः वर्तन्ते। व्यासरायवरेण्याः गुरूणाम् आदेशानुसारं श्रीनिवासं संसेव्य महामहितात्मानंवेङ्कटेशं त्रिभिः श्लोकैः स्तुतवन्तः।

प्रातः स्मरामि रमया सह वेङ्कटेशम्।
मन्दस्मितं मुखसरोरुहकान्तिरम्यम्।
माणिक्यकान्तिविलसन्मुकुटोर्ध्वपुंड्रम्।
पद्माक्षलक्ष्मणिकुण्डलमण्डिताङ्गम्।।

प्रातर्भजामि कररम्यसुसंखचक्रम्।
भक्ताभयप्रदकटिस्थलदत्तपाणिम्।
श्रीवत्सकौस्तुभलसन्मणिकाञ्चनाढ्यम्।
पीताम्बरं मदनकोटिसुमोहनाङ्गम्।।
प्रातर्नमामि परमात्मपदारविन्दम्।
आनन्दसान्द्रनिलयं मणिनूपुराढ्यम्।
एतत्समस्तजगतामितिदर्शयन्तम्।
वैकुण्ठमत्र भजतां करपल्लवेन।।
व्यासराजयतिप्रोक्तं श्लोकत्रयमिदं शुभम्।
प्रातः काले पठेद्यस्तु पापेभ्यो मुच्यते नरः।।

श्रीव्यासरायवर्याणां बृन्दावनं नवबृन्दावनं आनेगोंदि प्रदेशे अस्ति।



Edited and Published on behalf of T.T.Devasthanams by Prof. K.Rajagopalan, Ph.D., Chief Editor, T.T.D., and
Printed at T.T.D.Press by Sri. P.Ramaraju, M.A., Special Officer., (Press & Publication), T.T.D. Press, Tirupati - 517 507.

## तिरुमल श्री स्वामिन: आलये सालकट्ल ब्रह्मोत्सवेषु प्रचलित विविध वाहनसेवानां दृश्यमालिका























